# अथ विभूतिपादस्तृतीयः

तदेवं पूर्वोद्दिष्टं धारणाद्यङ्गत्रयं निर्णेतुं संयमसंज्ञाभिधानपूर्वकं बाह्याभ्यन्तरादिसिद्धि-प्रतिपादनाय लक्षयितुमुपक्रमते। तत्र धारणायाः स्वरूपमाह —

## देशबन्धश्चित्तस्य धारणा॥१॥

देशे नाभिचक्रनासाग्रादौ चित्तस्य बन्धो विषयान्तरपरिहारेण यत् स्थितीकरणं, सा चित्तस्य धारणोच्यते। अयमर्थः — मैत्र्यादिचित्तपरिकर्मवासितान्तः करणेन यम-नियमवता जितासनेन परहितप्राणविक्षेपेण प्रत्याहृतेन्द्रियग्रामेण निर्बाधे प्रदेश ऋजुकायेन जितद्वन्द्वेन योगिना नासाग्रादौ सम्प्रज्ञातस्य समाधेरभ्यासाय चित्तस्य स्थितीकरणं कर्त्तव्यमिति ॥

धारणामभिधाय ध्यानमभिधातुमाह —

## तत्र प्रत्ययैकतानता ध्यानम्॥२॥

तत्र तस्मिन् प्रदेशे, यत्र चित्तं धृतं, तत्र प्रत्ययस्य ज्ञानस्य, या एकतानता विसदृशपरिणाम-परिहारद्वारेण यदेव धारणायाम् अवलम्बनीकृतं, तदवलम्बनतयैव निरन्तरमुत्पत्तिः सा ध्यानमुच्यते॥

चरमयोगाङ्गं समाधिमाह —

## तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः॥३॥

तदेवोक्तलक्षणं ध्यानं, यत्रार्थमात्रनिर्भासम् अर्थाकारसमावेशादुद्भूतार्थरूपं न्यग्भूतज्ञान-स्वरूपत्वेन स्वरूपशून्यतामिवापद्यते, स समाधिरित्युच्यते, सम्यगाधीयत एकाग्रीक्रियते विक्षेपान् परिहृत्य मनो यत्र स समाधिः॥

उक्तलक्षणस्य योगाङ्गत्रयस्य व्यवहाराय स्वशास्त्रे तान्त्रिकीं संज्ञां कर्त्तुमाह—

## त्रयमेकत्र संयमः॥४॥

एकस्मिन् विषये धारणाध्यानसमाधित्रयं प्रवर्त्तमानं संयमसंज्ञा शास्त्रे व्यवह्रियते ॥

तस्य फलमाह —

## तज्जयात् प्रज्ञालोकः॥५॥

तस्य संयमस्य जयादभ्यासेन सात्म्योत्पादनात्, प्रज्ञाया विवेकख्यातेः आलोकः प्रसवो भवति, प्रज्ञा ज्ञेयं सम्यगवभासयतीत्यर्थः॥

तस्योपयोगमाह —

## तस्य भूमिषु विनियोगः॥६॥

तस्य संयमस्य, भूमिषु स्थूलसूक्ष्मालम्बनभेदेन स्थितासु चित्तवृत्तिषु, विनियोगः कर्त्तव्यः, अधरामधरां चित्तभूमिं जितां जितां ज्ञात्वोत्तरस्यां भूमौ संयमः कार्य्यः, न ह्यनात्मीकृताधर-भूमिरुत्तरस्यां भूमौ संयमं कुर्वाणः फलभाग्भवति॥

साधनपादे योगाङ्गान्यष्टावुद्दिश्य पञ्चानां लक्षणं विधाय त्रयाणां कथं न कृतम् इत्याशङ्क्याह—

## त्रयमन्तरङ्गं पूर्वेभ्यः॥७॥

पूर्वेभ्यो यमादिभ्यो योगाङ्गेभ्यः पारम्पर्य्येण समाधेरुपकारकेभ्यो धारणादियोगाङ्गत्रयं सम्प्रज्ञातस्य समाधेरन्तरङ्गं समाधिस्वरूपनिष्पादनात् ॥

तस्यापि समाध्यन्तरापेक्षया बहिरङ्गत्वमाह —

## तदपि बहिरङ्गं निर्बीजस्य॥८॥

निर्बीजस्य निरालम्बनस्य शून्यभावनाऽपरपर्य्यायस्य समाधेरेतदपि योगाङ्गत्रयं बहिरङ्गं, पारम्पर्य्येणोपकारकत्वात्॥

इदानीं योगसिद्धीर्व्याख्यातुकामः संयमस्य विषयपरिशुद्धिं कर्त्तुं क्रमेण परिणामत्रयमाह —

## व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोध-परिणामः॥९॥

व्युत्थानं क्षिप्तमूढविक्षिप्ताख्यं भूमित्रयं, निरोधः प्रकृष्टसत्त्वस्य अङ्गितया चेतसः परिणामः, ताभ्यां व्युत्थाननिरोधाभ्यां, यौ जनितौ संस्कारौ तयोर्यथाक्रमम् अभिभवप्रादुर्भावौ यदा भवतः; अभिभवो न्यग्भूततया कार्य्यकरणासामर्थ्येनावस्थानं, प्रादुर्भावौ वर्त्तमानेऽध्वनि अभिव्यक्तरूपतया आविर्भावः; तदा निरोधक्षणे चित्तस्योभयवृत्तित्वादन्वयो यः स निरोधपरिणाम उच्यते। अयमर्थः — यदा व्युत्थानसंस्काररूपो धर्मस्तिरोभूतो भवति, निरोधसंस्काररूपश्च आविर्भवति, धर्मिरूपतया च चित्तमुभयान्वयित्वेऽपि निरोधात्मना अवस्थितं प्रतीयते, तदा स निरोधपरिणाम-शब्देन व्यवह्रियते; चलत्वात् गुणवृत्तस्य यद्यपि चेतसो निश्चलत्वं नास्ति, तथापि एवम्भूतः परिणामः स्थैर्य्यमुच्यते॥

तस्यैव फलमाह —

## तस्य प्रशान्तवाहिता संस्कारात्॥१०॥

तस्य चेतसः, निरुक्तान्निरोधसंस्कारात् प्रशान्तवाहिता भवति; परिहृतविक्षेपतया सदृशप्रवाहपरिणामि चित्तं भवतीत्यर्थः॥

निरोधपरिणाममभिधाय समाधिपरिणाममाह —

## सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः॥११॥

सर्वार्थता चलत्वान्नानाविधार्थग्रहणं, चित्तस्य विक्षेपो धर्मः। एकस्मिन्नेवावलम्बने सदृशपरिणामिता एकाग्रता, सापि चित्तस्य धर्मः। तयोर्यथाक्रमं क्षयोदयौ सर्वार्थतालक्षणस्य धर्मस्य क्षयोऽत्यन्ताभिभवः, एकाग्रतालक्षणस्य धर्मस्य प्रादुर्भावोऽभिव्यक्तिः, चित्तस्योद्रिक्त-सत्त्वस्यान्वयितयावस्थानं समाधिपरिणाम इत्युच्यते।

पूर्वस्मात् परिणामादस्यायं विशेषः — तत्र संस्कारलक्षणयोः धर्मयोरभिभवप्रादुर्भावौ, पूर्वस्य व्युत्थानसंस्काररूपस्य न्यग्भावः, उत्तरस्य निरोधसंस्काररूपस्योद्भवोऽनभिभूतत्वेनावस्थानम्; इह तु क्षयोदयाविति सर्वार्थतारूपस्य विक्षेपस्यात्यन्ततिरस्कारादनुत्पत्तिरतीतेऽध्वनि प्रवेशः क्षयः, एकाग्रतालक्षणस्य धर्मस्योद्भवो वर्त्तमानेऽध्वनि प्रकटत्वम्॥

तृतीयमेकाग्रतापरिणाममाह —

## ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः॥१२॥

समाहितस्यैव चित्तस्यैकप्रत्ययो वृत्तिविशेषः शान्तः, अतीतमध्वानं प्रविष्टः। अपरस्तु उदितो वर्त्तमानेऽध्वनि स्फुरितः। द्वावपि समाहितचित्तत्वेन तुल्यावेकरूपालम्बनत्वेन सदृशौ प्रत्ययौ, उभयत्रापि समाहितस्यैव चित्तस्यान्वयित्वेनावस्थानं, स एकाग्रता-परिणाम इत्युच्यते॥

चित्तपरिणामोक्तं रूपमन्यत्राप्यतिदिशन्नाह —

## एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः॥१३॥

एतेन त्रिविधेनोक्तेन चित्तपरिणामेन, भूतेषु स्थूलसूक्ष्मेषु, इन्द्रियेषु बुद्धिकर्मान्तःकरणभेदेन अवस्थितेषु, धर्मलक्षणावस्थाभेदेन त्रिविधः परिणामो व्याख्यातोऽवगन्तव्यः। अवस्थितस्य धर्मिणः पूर्वधर्मनिवृत्तौ धर्मान्तरापत्तिः धर्मपरिणामः; यथा — मृल्लक्षणस्य धर्मिणः पिण्डरूपधर्मपरित्यागेन घटरूपधर्मान्तरस्वीकारो धर्मपरिणाम इत्युच्यते। लक्षणपरिणामो यथा — तस्यैव घटस्यानागता-ध्वपरित्यागेन वर्त्तमानाध्वस्वीकारः। तत्परित्यागेन अतीताध्वपरिग्रहः। अवस्थापरिणामो यथा — तस्यैव घटस्य प्रथमद्वितीययोः सदृशयोः क्षणयोरन्वयित्वेन, यतश्च गुणवृत्तिर्नापरिणम्यमाना क्षणमप्यस्ति॥

ननु कोऽयं धर्मीत्याशङ्क्य धर्मिणो लक्षणमाह —

## शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी॥१४॥

शान्ता ये कृतस्वस्वव्यपारा अतीतेऽध्वनि अनुप्रविष्टाः; उदिता येऽनागतमध्वानं परित्यज्य वर्त्तमानेऽध्वनि स्वव्यापारं कुर्वन्ति; अव्यपदेश्या ये शक्तिरूपेण स्थिता व्यपदेष्टुं न शक्यन्ते, तेषां यथास्वं सर्वात्मकत्वमित्येवमादयो नियतकार्य्यकारणरूपयोग्यतयावच्छिन्ना शक्तिरेवेह धर्मशब्देनाभिधीयते। तं त्रिविधमपि धर्मं योऽनुपतति अनुवर्त्तते, अन्वयित्वेन स्वीकरोति स शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मीति उच्यते; यथा सुवर्णं रुचकरूपधर्मपरित्यागेन स्वस्तिक-रूपधर्मान्तरपरिग्रहे सुवर्णरूपतयाऽनुवर्त्तमानं तेषु धर्मेषु कथञ्चित् भिन्नेषु धर्मिरूपतया सामान्यात्मना धर्मरूपतया विशेषात्मना स्थितमन्वयित्वेन अवभासते॥

एकस्य धर्मिणः कथमनेके परिणामा इत्याशङ्कामपनेतुमाह —

## क्रमान्यत्वं परिणामान्यत्वे हेतुः॥१५॥

धर्माणाम् उक्तलक्षणानां यः क्रमस्तस्य यत् प्रतिक्षणमन्यत्वं परिदृश्यमानं, परिणामस्योक्त-लक्षणस्यान्यत्वे, नानाविधत्वे, हेतुर्लिङ्गं ज्ञापकं भवति। अयमर्थः — योऽयं नियतः क्रमः मृच्चूर्णात्मृत्पिण्डः, ततः कपालानि, तेभ्यश्च घट इत्येवं रूपः परिदृश्यमानः परिणामस्य अन्यत्वमावेदयति। तस्मिन्नेव धर्मिणि यो लक्षणपरिणामस्य अवस्थापरिणामस्य च क्रमः, सोऽपि अनेनैव न्यायेन परिणामान्यत्वे गमकोऽवगन्तव्यः।

सर्व एव भावा नियतेनैव क्रमेण प्रतिक्षणं परिणम्यमानाः परिदृश्यन्ते; अतः सिद्धं क्रमान्यत्वात् परिणामान्यत्वम्। सर्वेषां चित्तादीनां परिणममानानां केचिद्धर्माः प्रत्यक्षेणैवोपलभ्यन्ते, यथा — सुखादयः संस्थानादयश्च। केचिदेकान्तेनानुमानगम्याः, यथा — धर्मसंस्कार शक्तिप्रभृतयः। धर्मिणश्च भिन्नाभिन्नरूपतया सर्वत्रानुगमः॥

इदानीमुक्तस्य संयमस्य विषयप्रदर्शनद्वारेण सिद्धीः प्रतिपादयितुमाह —

## परिणामत्रयसंयमादतीतानागतज्ञानम्॥१६॥

धर्मलक्षणावस्थाभेदेन यत् परिणामत्रयमुक्तं, तत्र संयमात्तस्मिन्विषये पूर्वोक्तसंयमस्य करणात्, अतीतानागतज्ञानं योगिनः समाधेराविर्भवति। इदमत्र तात्पर्य्यम् — अस्मिन्धर्मिणि अयं धर्मः, इदं लक्षणम्, इयमवस्था च अनागतादध्वनः समेत्य वर्त्तमाने अध्वनि स्वव्यापारं विधायातीतम् अध्वानं प्रविशतीत्येव परिहृतविक्षेपतया यदा संयमं करोति, तदा यत् किञ्चिदनुत्पन्नमतिक्रान्तं वा तत्सर्वं योगी जानाति, यतश्चित्तस्य शुद्धसत्त्वप्रकाशरूपत्वात् सर्वार्थग्रहणसामर्थ्यमविद्यादिभि-र्विक्षेपैरपक्रियते। यदा तु तैस्तैरुपायैर्विक्षेपाः परिह्रियन्ते तदा निवृत्तमलस्येव आदर्शस्य सर्वार्थग्रहणसामर्थ्यमेकाग्रताबलादाविर्भवति॥

सिद्धन्तरमाह —

## शब्दार्थप्रत्ययानामितरेतराध्यासात्संकरस्तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम् ॥१७॥

शब्दः श्रोत्रेन्द्रियग्राह्यो नियतक्रमवर्णात्मा नियतैकार्थप्रतिपत्त्यवच्छिन्नः, यदि वा, क्रमरहिताः स्फोटात्मा शास्त्रसंस्कृतबुद्धिग्राह्यः, उभयथाऽपि पदरूपो वाक्यरूपश्च, तयोरेकार्थप्रतिपत्तौ सामर्थ्यात्। अर्थो जातिगुणक्रियादिः, प्रत्ययो ज्ञानं विषयाकारा बुद्धिवृत्तिः, एषां शब्दार्थज्ञानानां व्यवहार इतरेतराध्यासाद् भिन्नानामपि बुद्ध्येकरूपतासम्पादनात् सङ्कीर्णत्वम्। तथा हि —

गामानयेत्युक्ते कश्चिद् गोलक्षणमर्थं गोत्वजात्यवच्छिन्नं सास्नादिमत्पिण्डरूपं शब्दञ्च तद्वाचकं ज्ञानञ्च तत्ग्राहकमभेदेनैवाध्यवस्यति, न त्वस्य गोशब्दो वाचकः, अयं गोशब्दस्य वाच्यः, तयोरिदं ग्राहकं ज्ञानमिति भेदेन व्यवहरति। तथा हि — कोऽयमर्थः, कोऽयं शब्दः, किमिदं ज्ञानमिति पृष्टः सर्वत्रैकरूपमेवोत्तरं ददाति गौरति। स यद्येकरूपतां न प्रतिपद्यते, कथमेकरूपमुत्तरं प्रयच्छति?

एतस्मिन् स्थिते योऽयं प्रविभागः, — इदं शब्दस्य तत्त्वं यद्वाचकत्वं नाम, इदमर्थस्य यद्वाच्यत्वम्, इदं ज्ञानस्य, यत् प्रकाशकत्वमिति प्रविभागं विधाय तस्मिन्प्रविभागे यः संयमं करोति तस्य सर्वेषां भूतानां मृगपशुपक्षिसरीसृपादीनां यद् रुतं यः शब्दस्तत्र ज्ञानमुत्पद्यते, अनेनैवाभिप्रायेण तेन प्राणिनायं शब्दः समुच्चारित इति सर्वं जानाति॥

सिद्धन्तरमाह —

## संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम्॥१८॥

द्विविधाश्चित्तस्य वासनारूपाः संस्काराः; केचित् स्मृतिमात्रोत्पादनफलाः, केचित् जात्यायुर्भोगलक्षणा विपाकहेतवः; यथा — धर्माधर्माख्याः, तेषु संस्कारेषु यदा संयमं करोति, एवं मया सोऽर्थोऽनुभूतः, एवं मया सा क्रिया निष्पादितेति पूर्ववृत्तमनुसन्दधानो भावयन्नेव प्रबोधकमन्तरेण उद्बुद्धसंस्कारः सर्वमतीतं स्मरति; क्रमेण साक्षात्कृतेषूद्बुद्धेषु संस्कारेषु पूर्वजन्मान्तरानुभूतानपि जात्यादीन् प्रत्यक्षेण पश्यति॥

सिद्धन्तरमाह —

## प्रत्ययस्य परचित्तज्ञानम्॥१९॥

प्रत्ययस्य परचित्तस्य केनचिद् मुखरागादिना लिङ्गेन गृहीतस्य, यदा संयमं करोति, तदा परकीयचित्तस्य ज्ञानमुत्पद्यते, सरागमस्य चित्तं वीतरागं वेति। परचित्तगतान् सर्वानपि धर्मान् जानातीत्यर्थः॥

अस्यैव परचित्तज्ञानस्य विशेषज्ञानमाह —

## न च तत्सालम्बनं तस्याविषयीभूतत्वात्॥२०॥

तस्य परस्य यच्चित्तं तत् सालम्बनं स्वकीयेनालम्बनेन सहितं न शक्यते ज्ञातुम्, आलम्बनस्य केनचिल्लिङ्गेनाविषयीकृतत्वात्। लिङ्गाद्धि चित्तमात्रं परस्यावगतं न तु नीलविषयमस्य चित्तं पीतविषयमिति वा। यच्च न गृहीतं तत्र संयमस्य कर्त्तुमशक्यत्वात् न भवति परचित्तस्य यो विषयस्तत्र ज्ञानं, तस्मात् परकीयचित्तं नालम्बनसहितं गृह्यते, तस्यालम्बनस्यागृहीतत्वात्; चित्तधर्माः पुनर्गृह्यन्त एव। यदा तु किमनेनालम्बितमिति प्रणिधानं करोति, तदा तत्संयमात्तद्विषयमपि ज्ञानं उत्पद्यत एव॥

सिद्धन्तरमाह —

## कायरूपसंयमात्तद्ग्राह्यशक्तिस्तम्भे चक्षुष्प्रकाशासम्प्रयोगेऽन्तर्धानम्॥२१॥

कायः शरीरं, तस्य रूपं चक्षुर्ग्राह्यो गुणः, तस्मिन्नस्त्यस्मिन् काये रूपमिति संयमात्तस्य रूपस्य चक्षुर्ग्राह्यत्वरूपा या शक्तिस्तस्याः स्तम्भे भावनावशात् प्रतिबन्धे, चक्षुष्प्रकाशासंयोगे चक्षुषः प्रकाशः सत्त्वधर्मः, तस्यासंयोगे तद् ग्रहणव्यापाराभावे योगिनोऽन्तर्द्धानं भवति, न केनचिदसौ दृश्यत इत्यर्थः। एतेनैव रूपान्तर्द्धानोपायप्रदर्शनेन शब्दादीनां श्रोत्रादिग्राह्याणामन्तर्द्धानमुक्तं वेदितव्यम्॥

सिद्धन्तरमाह —

## सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्तज्ञानमरिष्टेभ्यो वा॥२२॥

आयुर्विपाकं यत्पूर्वकृतं कर्म तत् द्विप्रकारं, सोपक्रमं निरुपक्रमञ्च। तत्र सोपक्रमं यत्फलजननाय सहोपक्रमेण कार्य्यकरणाभिमुख्येन वर्त्तते; यथा उष्णप्रदेशे प्रसारितार्द्रवासः शीघ्रमेव शुष्यति। उक्तविपरीतं निरुपक्रमम्, यथा तदेवार्द्रवासः संवर्तितम् अनुष्णप्रदेशे चिरेण शुष्यति। तस्मिन् द्विविधे कर्मणि यः संयमं करोति किं मम कर्म शीघ्रविपाकम्, चिरविपाकं वा, एवं ध्यानदार्ढ्यादपरान्तज्ञानमस्योत्पद्यते। अपरान्तः शरीरवियोगः, तस्मिन् ज्ञानम् अमुष्मिन् काले अमुष्मिन् देशे मम शरीरवियोगो भविष्यतीति निःसंशयं जानाति।

अरिष्टेभ्यो वा। अरिष्टानि त्रिविधानि, आध्यात्मिकाधिभौतिकाधिदैविकानि। तत्राध्यात्मिकानि पिहितकर्णः कोष्ठ्यस्य वायोर्घोषं नः शृणोतीत्येवमादीनि। आधिभौतिकानि अकस्माद् विकृतपुरुषदर्शनादीनि। आधिदैविकानि अकाण्डे एव द्रष्टुमशक्यस्वर्गादिपदार्थ-दर्शनादीनि। तेभ्यः शरीरवियोगकालं जानाति। यद्यपि अयोगिनामप्यरिष्टेभ्यः प्रायेण तज्ज्ञानमुत्पद्यते, तथापि तेषां सामान्याकारेण तत्संशयरूपं, योगिनां पुनर्नियतदेशकालतया

प्रत्यक्षवदव्यभिचारि ॥

परिकर्मनिष्पादिताः सिद्धीः प्रतिपादयितुमाह —

## मैत्र्यादिषु बलानि॥२३॥

मैत्रीकरुणामुदितोपेक्षासु यो विहितसंयमस्तस्य बलानि मैत्र्यादीनां सम्बन्धीनि प्रादुर्भवन्ति; मैत्रीकरुणामुदितोपेक्षास्तथास्य प्रकर्षं गच्छन्ति यथा सर्वस्य मित्रत्वादिकम् अयं संपद्यते॥

सिद्धन्तरमाह —

## बलेषु हस्तिबलादीनि॥२४॥

हस्त्यादिसम्बन्धिषु बलेषु कृतसंयमस्य तद्बलानि हस्त्यादिबलाविर्भवन्ति। तदयमर्थः यस्मिन् हस्तिबले वायुवेगे सिंहवीर्य्ये वा तन्मयीभावेन अयं संयमं करोति तत्तत्सामर्थ्ययुक्तं सत्त्वमस्य प्रादुर्भवतीत्यर्थः॥

सिद्धन्तरमाह —

## प्रवृत्त्याऽऽलोकन्यासात्सूक्ष्मव्यवहितविप्रकृष्टज्ञानम्॥२५॥

प्रवृत्तिर्विषयवती ज्योतिष्मती च प्रागुक्ता (१.३५-३६) तस्या य आलोकः सात्त्विकप्रकाशः तस्य निखिलेषु विषयेषु न्यासात् तद्वासितानां विषयाणां भावनात्सान्तःकरणेषु इन्द्रियेषु च प्रकृष्टशक्तिमापन्नेषु सुसूक्ष्मस्य परमाण्वादेः व्यवहितस्य भूम्यन्तर्गतस्य निधानादेः, विप्रकृष्टस्य मेर्वपरपार्श्ववर्त्तिनो रसायनादेर्ज्ञानमुत्पद्यते॥

एतत्समानवृत्तान्तसिद्धन्तरमाह —

## भुवनज्ञानं सूर्ये संयमात्॥२६॥

सूर्ये प्रकाशमये यः संयमः करोति तस्य सप्त भूर्भुवःस्वःप्रभृतिषु लोकेषु यानि भुवनानि तत्तत्सन्निवेशभाञ्जिस्थनानि, तेषु यथावदस्य ज्ञानमुत्पद्यते। पूर्वस्मिन् सूत्रे सात्त्विकप्रकाश आलम्बनतयोक्तः, इह तु भौतिक इति विशेषः॥

भौतिकप्रकाशान्तरालम्बनद्वारेण सिद्धन्तरमाह —

## चन्द्रे ताराव्यूहज्ञानम्॥२७॥

ताराणां ज्योतिषां यो व्यूहो विशिष्टः सन्निवेशस्तस्य चन्द्रे कृतसंयमस्य ज्ञानमुप्तद्यते। सूर्य्यप्रकाशेन हततेजस्कत्वात्ताराणां सूर्य्यसंयमात्तज्ज्ञानं न शक्यं भवितुमर्हतीति पृथगुपायोऽभिहितः॥

सिद्धन्तरमाह —

## ध्रुवे तद्गतिज्ञानम्॥२८॥

ध्रुवे निश्चले ज्योतिषां प्रधाने कृतसंयमस्य तासां ताराणां या गतिः प्रत्येकं नियतकाला नियतदेशा च, तस्या ज्ञानमुप्तद्यते, इयं तारा, अयं ग्रहः इयता कालेनामुं राशिम् इदं नक्षत्रं यास्यतीति सर्वं जानाति। इदं कालज्ञानस्य फलमुक्तं भवति॥

बाह्याः सिद्धीः प्रतिपाद्याऽन्तराः सिद्धीः प्रतिपादयितुमुपक्रमते —

## नाभिचक्रे कायव्यूहज्ञानम्॥२६॥

शरीरमध्यवर्त्ति नाभिसंज्ञकं यत् षोडशारं चक्रं तस्मिन् कृतसंयमस्य योगिनः कायगतो व्यूहो विशिष्टरस-मल-धातु-नाड्यादीनामवस्थानं, तत्र ज्ञानमुत्पद्यते। इदमुक्तं भवति — नाभिच्रकं शरीरमध्यवर्ति सर्वतः प्रसृतानां नाड्यादीनां मूलभूतम्, अतस्तत्र कृतावधानस्य समग्रसन्निवेशो यथावदाभाति ॥

सिद्धन्तरमाह —

## कण्ठकूपे क्षुत्पिपासानिवृत्तिः॥३०॥

कण्ठे गले कूपः कण्ठकूपः जिह्वामूले जिह्वातन्तोरधस्तात् कूप इव कूपो गर्त्ताकारप्रदेशः, प्राणादेर्यत्संस्पर्शात् क्षुतपिपासादयः प्रादुर्भवन्ति, तस्मिन् कृतसंयमस्य योगिनः क्षुत्पिपासादयो निवर्त्तन्ते, घण्टिकाधस्तात् स्रोतसा धार्य्यमाणे तस्मिन् भाविते भवत्येवंविधा सिद्धिः॥

सिद्धन्तरमाह —

## कूर्मनाड्यां स्थैर्यम्॥३१॥

कण्ठकूपस्याधस्ताद् या कूर्माख्या नाडी तस्यां कृतसंयमस्य चेतसः स्थैर्य्यमुत्पद्यते, तत्स्थानमनुप्रविष्टस्य चञ्चलता न भवतीत्यर्थः, यदि वा कायस्य स्थैर्य्यमुप्तद्यते न केनचित् स्पन्दयितुं शक्यत इत्यर्थः॥

सिद्धन्तरमाह —

## मूर्द्धज्योतिषि सिद्धदर्शनम्॥३२॥

शिरःकपाले ब्रह्मरन्ध्राख्ये छिद्रे प्रकाशाधारत्वात् ज्योतिषि, यथा गृहाभ्यन्तरस्थस्य मणेः प्रसरन्ती प्रभा कुञ्चिताकारेव सर्वप्रदेशे सङ्घटते, तथा हृदयस्थः सात्त्विकः प्रकाशः प्रसृतस्तत्र सम्पिण्डितत्वं भजते। तत्र कृतसंयमस्य ये द्यावापृथिव्योरन्तरालवर्तिनः सिद्धा दिव्याः पुरुषाः

तेषामितरप्राणिभिरदृश्यानां, तस्य दर्शनं भवति, तान् पश्यति तैश्च स सम्भाषत इत्यर्थः॥

सर्वज्ञत्व उपायमाह —

## प्रातिभाद्वा सर्वम्॥ ३३॥

निमित्तानपेक्षं मनोमात्रजन्यम् अविसंवादकं द्रागुत्पद्यमानं ज्ञानं प्रतिभा, तस्यां संयमे क्रियमाणे प्रातिभं विवेकख्यातेः पूर्वभावि तारकं ज्ञानमुदेति, यथा उदेष्यतः सवितुः पूर्वं प्रभा प्रादुर्भवति, तद्वद् विवेकख्यातेः पूर्वं तारकं सर्वविषयं ज्ञानमुत्पद्यते, तस्मिन् सति संयमान्तरानपेक्षः सर्वं जानातीत्यर्थः ॥

सिद्ध्यन्तरमाह —

## हृदये चित्तसंवित्॥ ३४॥

हृदयं शरीरस्य प्रदेशविशेषः, तस्मिन्नधोमुखस्वल्पपुण्डरीकाभ्यन्तरेऽन्तःकरणसत्त्वस्य स्थानं, तत्र कृतसंयमस्य स्वपरचित्तज्ञानमुत्पद्यते, स्वचित्तगताः सर्वा वासनाः, परचित्तगतांश्च रागादीञ् जानातीत्यर्थः॥

सिद्ध्यन्तरमाह —

## सत्त्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोगः परार्थत्वात्स्वार्थ-संयमात्पुरुषज्ञानम्॥ ३५॥

सत्त्वं प्रकाशसुखात्मकः प्राधानिकः परिणामविशेषः, पुरुषो भोक्ता अधिष्ठातृरूपः, तयोरत्यन्तासङ्कीर्णयोर्भोग्यभोक्तृरूपत्वाद् अचेतनचेतनत्वाच्च भिन्नयोर्यः प्रत्ययस्याविशेषो भेदेनाप्रतिभासनं तस्मात्, सत्त्वस्यैव कर्त्तृताप्रत्ययेन या सुखदुःखसंवित् स भोगः।

सत्त्वस्य स्वार्थनैरपेक्ष्येण परार्थः पुरुषार्थनिमित्तः, तस्मादन्यो यः स्वार्थः पुरुषस्वरूप-मात्रालम्बनः परित्यक्ताहङ्कारसत्त्वे या चिच्छायासंक्रान्तिस्तत्र कृतसंयमस्य पुरुषविषयं ज्ञानमुत्पद्यते, तत्र तदेवं रूपं स्वालम्बनं ज्ञानं सत्त्वनिष्ठं पुरुषो जानातीत्यर्थः। न पुनः पुरुषो ज्ञाता ज्ञानस्य विषयभावमापद्यते, ज्ञेयत्वापत्तेः, ज्ञातृ-ज्ञेयत्वयोरत्यन्तविरोधात्॥

अस्यैव संयमस्य फलमाह —

## ततः प्रातिभश्रावणवेदनादर्शास्वादवार्त्ता जायन्ते॥ ३६॥

ततः पुरुषसंयमादभ्यस्यमानाद् व्युत्थितस्यापि ज्ञानानि जायन्ते। तत्र प्रातिभं पूर्वोक्तं ज्ञानं, तस्याविर्भवनात् सूक्ष्मादिकमर्थं पश्यति। श्रावणं श्रोत्रेन्द्रियजं ज्ञानं, तस्माच्च प्रकृष्टं दिव्यं शब्दं जानाति। वेदना स्पर्शेन्द्रियजं ज्ञानं, वेद्यतेऽनयेति कृत्वा तान्त्रिक्या संज्ञया व्यवह्रियते;

तस्माद् दिव्यस्पर्शविषयं ज्ञानं समुपजायते। आदर्शश्चक्षुरिन्द्रियजं ज्ञानम्, आ समन्तात् दृश्यतेऽनुभूयते रूपमनेनेति कृत्वा; तस्य प्रकर्षाद्दिव्यं रूपज्ञानमुत्पद्यते। आस्वादो रसनेन्द्रियजं ज्ञानम्, आस्वाद्यतेऽनेनेति कृत्वा; तस्मिन् प्रकृष्टे दिव्ये रसेसंविदुपजायते। वार्त्ता गन्धसंवित्, वृत्तिशब्देन तान्त्रिक्या परिभाषया घ्राणेन्द्रियमुच्यते, वर्त्तते गन्धविषये इति कृत्वा वृत्तेर्घ्राणेन्द्रियाज् जाता वार्त्ता गन्धसंवित्, तस्यां प्रकृष्यमाणायां दिव्यगन्धोऽनुभूयते॥

एतेषां फलविशेषाणां विषयविभागमाह —

## ते समाधावुपसर्गा व्युत्थाने सिद्धयः॥ ३७॥

ते प्राक् प्रतिपादिताः फलविशेषाः, समाधेः प्रकर्षे गच्छत उपसर्गा उपद्रवा विघ्नाः, तत्र हर्षविस्मयादिकरणेन समाधिः शिथिलीभवति। व्युत्थाने तु पुनर्व्यवहारदशायां विशिष्टफल-दायकत्वात् सिद्धयो भवन्ति॥

सिद्ध्यन्तरमाह —

## बन्धकारणशैथिल्यात् प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः॥ ३८॥

व्यापकत्वादात्मचित्तयोर्नियतकर्मवशादेव शरीरान्तर्गतयोरेव भोक्तृभोग्यभावेन यत् संवेदनमुपजायते स एव शरीरबन्ध इत्युच्यते, तद् यदा समाधिवशाद् बन्धकारणं धर्माधर्माख्यं शिथिलं भवति तानवमापद्यते। चित्तस्य च योऽसौ प्रचारः हृदयप्रदेशादिन्द्रियद्वारेण विषयाभिमुख्येन प्रसरः तस्य संवेदनं ज्ञानं — इयं चित्तवहा नाड़ी, अनया चित्तं वहति, इयं च रसप्राणादिवहाभ्यो नाडीभ्यो विलक्षणेति — स्व-परशरीरयोर्यदा सञ्चारं जानाति तदा परकीयं मृतं जीवच्छरीरं वा चित्तसञ्चारद्वारेण प्रविशति; चित्तञ्च परशरीरे प्रविशदिन्द्रियाण्यपि अनुवर्त्तन्ते मधुकरराजमिव मक्षिकाः। अथ परशरीरप्रविष्टो योगी स्वशरीरवत् तेन सर्वं व्यवहरति; यतो व्यापकयोश्चित्त-पुरुषयोर्भोगसङ्कोचे कारणं कर्म, तत् चेत् समाधिना क्षिप्तं, तदा स्वातन्त्र्यात् सर्वत्रैव भोगनिष्पत्तिः॥

सिद्ध्यन्तरमाह —

## उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च॥ ३९॥

समस्तानामिन्द्रियाणां तुषज्वालावद् या युगपदुत्थिता वृत्तिः सा जीवनशब्दवाच्या; तस्याः क्रियाभेदात् प्राणापानादिसंज्ञाभिर्व्यपदेशः। तत्र हृदयान्मुखनासिकाद्वारेण वायोः प्रायणात् प्राण इत्युच्यते। नाभिदेशात् पादाङ्गुष्ठपर्य्यन्तमपनयनादपानः। नाभिदेशं परिवेष्ट्य समन्ताद् नयनात् समानः। कृकाटिकादेशादाशिरोवृत्तेरुन्नयनादुदानः। व्याप्य नयनात् सर्वशरीरव्यापी व्यानः।

तत्र उदानस्य संयमद्वारेण जयादितरेषां वायूनां निरोधादूर्ध्वगतित्वेन जले महानद्यादौ महति वा कर्दमे तीक्ष्णेषु कण्टकेषु वा न सज्जतेऽतिलघुत्वात्। तूलपिण्डवज्जलादौ

मञ्जितोऽप्युद्गच्छतीत्यर्थः॥

सिद्धन्तरमाह —

## समानजयाज्ज्वलनम्॥४०॥

अग्निमावेष्ट्य व्यवस्थितस्य समानाख्यस्य वायोर्जयात् संयमेन वशीकाराद् निरावरणस्याग्नेरूर्ध्वत्वात्तेजसा प्रज्वलन्निव योगी प्रतिभाति॥

सिद्धन्तरमाह —

## श्रोत्राकाशयोः सम्बन्धसंयमाद्दिव्यं श्रोत्रम्॥४१॥

श्रोत्रं शब्दग्राहकमाहङ्कारिकमिन्द्रियम्, आकाशं व्योम, शब्दतन्मात्रकार्य्यम्। तयोः सम्बन्धो देशदेशिभावलक्षणः, तस्मिन् कृतसंयमस्य योगिनो दिव्यं श्रोत्रं प्रवर्त्तते, युगपत् सूक्ष्मव्यवहितविप्रकृष्टशब्दग्रहणसमर्थं भवतीत्यर्थः॥

सिद्धन्तरमाह —

## कायाकाशयोः सम्बन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम्॥४२॥

कायः पाञ्चभौतिकः शरीरं, तस्याकाशेनावकाशदायकेन यः सम्बन्धस्तत्र संयमं विधाय लघुनि तूलादौ समापत्तिं तन्मयीभावलक्षणं विधाय प्राप्तातिलघुभावो योगी प्रथमं यथारुचि जले सञ्चरणक्रमेणोर्णनाभतन्तुजालेन सञ्चरमाण आदित्यरश्मिभिश्च विहरन् यथेष्टमाकाशेन गच्छति॥

सिद्धन्तरमाह —

## बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः॥४३॥

शरीराद् बहिर्या मनसः शरीरनैरपेक्ष्येण वृत्तिः, सा महाविदेहा नाम विगताहङ्कारकार्य्यवेगा उच्यते। ततस्तस्यां कृतात्संयमात्, प्रकाशावरणक्षयः, सात्त्विकस्य चित्तस्य यः प्रकाशः, तस्य यदावरणं क्लेशकर्मादि, तस्य क्षयः प्रविलयो भवति। अयमर्थः — शरीराहङ्कारे सति या मनसो बहिर्वृत्तिः सा कल्पिता इत्युच्यते। यदा पुनः शरीरादहङ्कारभावं परित्यज्य स्वातन्त्र्येण मनसो वृत्तिः सा अकल्पिता, तस्यां संयमाद् योगिनः सर्वे चित्तमलाः क्षीयन्ते॥

तदेवं पूर्वान्तविषया परान्तविषया मध्यभवाश्च सिद्धीः प्रतिपाद्यानन्तरं भुवनज्ञानादिरूपा बाह्याः, कायव्यूहादिरूपा आभ्यन्तराः, परिकर्मनिष्पन्नभूताश्च मैत्र्यादिषु बलानीत्येवमाद्याः समाध्युपयोगिनीश्चान्तःकरणबहिःकरणलक्षणेन्द्रियभवाः, प्राणादिवायुभवाश्च सिद्धीश्चित्तदाढ्र्याय समाधेश्चाश्वासोत्पत्तये प्रतिपाद्य इदानीं स्वदर्शनोपयोगिसबीजनिर्बीजसमाधिसिद्धये

विविधोपायप्रदर्शनायाह —

## स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद् भूतजयः॥४४॥

पञ्चानां पृथिव्यादीनां भूतानां ये पञ्च अवस्थाविशेषरूपा धर्माः स्थूलत्वादयः, तत्र कृतसंयमस्य भूतजयो भवति, भूतान्यस्य वश्यानि भवन्तीत्यर्थः। तथा हि — भूतानां परिदृश्यमानं विशिष्टाकारवत् स्थूलरूपम्; स्वरूपं चैषां यथाक्रमं कार्य्यं गन्धस्नेहोष्णताप्रेरणावकाशदानलक्षणम्; सूक्ष्मञ्च यथाक्रमं भूतानां कारणभेदेन व्यवस्थितानि गन्धादितन्मात्राणि, अन्वयिनो गुणाः प्रकाशप्रवृत्तिस्थितिरूपतया सर्वत्रैव अन्वयित्वेन समुपलभ्यन्ते; अर्थवत्त्वं तेषु एव गुणेषु भोगापवर्गसम्पादनाख्या शक्तिः।

तदेवं भूतेषु पञ्चसु उक्त धर्मलक्षणावस्थाभिन्नेषु प्रत्यवस्थं संयमं कुर्वन् योगी भूतजयी भवति। तद्यथा — प्रथमं स्थूलरूपे संयमं विधाय तदनु स्वरूपे, इत्येवं क्रमेण तस्य कृतसंयमस्य सङ्कल्पानुविधायिन्यो वत्सानुसारिण्य इव गावो भूतप्रकृतयो भवन्तीत्यर्थः॥

तस्यैव भूतजयस्य फलमाह —

## ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्मानभिघातश्च॥४५॥

अणिमा परमाणुरूपतापत्तिः, महिमा महत्त्वं, लघिमा लघुत्वं, तूलपिण्डवल्लघुत्वप्राप्तिः, गरिमा गुरुत्वप्राप्तिः, अङ्गुल्यग्रेण चन्द्रादिस्पर्शनशक्तिः, प्राकाम्यम् इच्छानभिघातः, शरीरान्तःकरणेश्वरत्वम् ईशित्वं, सर्वत्र प्रभविष्णुता वशित्वं, सर्वाण्येव भूतानि अनुगामित्वात्तदुक्तं नातिक्रामन्ति। यत्रकामावसायो यस्मिन् विषयेऽस्य कामः स्वेच्छा भवति, तस्मिन् विषये योगिनः अध्यवसायो भवति तं विषयं स्वीकारद्वारेणाभिलाषसमाप्तिपर्य्यन्तं नयतीत्यर्थः; ते एते अणिमाद्याः समाध्युपयोगिनो भूतजयाद् योगिनः प्रादुर्भवन्ति; यथा — परमाणुत्वं प्राप्तो वज्रादीनामप्यन्तः प्रविशति; एवं सर्वत्र योज्यम्। एतेऽणिमादयोऽष्टौ गुणा महासिद्धय उच्यन्ते।

कायसम्पत् वक्ष्यमाणा, तां प्राप्नोति। तद्धर्मानभिघातश्च, तस्य कायस्य ये धर्मा रूपादयः, तेषामनभिघातो नाशो न कुतश्चित् भवति, नास्य रूपमग्निर्दहति, न वायुः शोषयतीत्यादि योज्यम् ॥

कायसम्पदाह —

## रूपलावण्यबलवज्रसंहननत्वानि कायसम्पत्॥४६॥

रूपलावण्यबलानि प्रसिद्धानि, वज्रसंहननत्वं वज्रवत् कठिना संहतिरस्य शरीरे भवतीत्यर्थः, इति कायस्य आविर्भूतगुणसम्पत्॥

एवं भूतजयमभिधाय प्राप्तभूमिकाविशेषस्य इन्द्रियजयमाह —

## ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः॥४७॥

ग्रहणमिन्द्रियाणां विषयाभिमुखी वृत्तिः, स्वरूपं सामान्येन प्रकाशकत्वम्, अस्मिता अहङ्कारानुगमः, अन्वयार्थवत्त्वे पूर्ववत् (३.४४); एतेषाम् इन्द्रियाणामवस्थापञ्चके पूर्ववत् संयमं कृत्वा इन्द्रियजयी भवति॥

तस्य फलमाह —

## ततो मनोजवित्वं विकरणभावः प्रधानजयश्च॥४८॥

शरीरस्य मनोवदनुत्तमगतिलाभो मनोजवित्वम्; कायनिरपेक्षाणाम् इन्द्रियाणां वृत्तिलाभो विकरणभावः; सर्ववशित्वं प्रधानजयः; एताः सिद्धयो जितेन्द्रियस्य प्रादुर्भवन्ति; ताश्चास्मिञ् शास्त्रे 'मधुप्रतीका' इत्युच्यन्ते; यथा मधुन एकदेशोऽपि स्वदते, एवं प्रत्येकमेताः सिद्धयः स्वदन्त इति मधुप्रतीकाः॥

इन्द्रियजयमभिधाय अन्तःकरणजयमाह —

## सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च॥४९॥

तस्मिन् बुद्धेः सात्त्विके परिणामे कृतसंयमस्य या सत्त्वपुरुषयोरुत्पद्यते विवेकख्यातिः गुणानां कर्तृत्वाभिमान-शिथिलीभावरूपा तन्माहात्म्यात् तत्रैव स्थितस्य योगिनः सर्वाधिष्ठातृत्वं सर्वज्ञार्तृत्वं समाधेर्भवति। सर्वेषां गुणपरिणामानां भावानां स्वामिवदाक्रमणं सर्वाधिष्ठातृत्वम्; तेषामेव च शान्तोदिताव्यपदेश्यधर्मित्वेनावस्थितानां यथावद् विवेकज्ञानं सर्वज्ञातृत्वम्। एषाञ्चास्मिन् शास्त्रे परस्यां वशीकारसंज्ञायां प्राप्तायां विशोका नाम सिद्धिरित्युच्यते ॥

क्रमेण भूमिकान्तरमाह —

## तद्वैराग्यादपि दोषबीजक्षये कैवल्यम्॥५०॥

तस्यामपि विशोकायां सिद्धौ यदा वैराग्यमुत्पद्यते योगिनस्तदा तस्माद्दोषाणां रागादीनां, यद्बीजमविद्यादयः, तस्य क्षये निर्मूलने कैवल्यमात्यन्तिकी दुःखनिवृत्तिः पुरुषस्य गुणानामधिकारपरिसमाप्तौ स्वरूपप्रतिष्ठत्वम्॥

तस्मिन्नेव समाधौ स्थित्यमुपायमाह —

## स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसंगात्॥५१॥

चत्वारो योगिनः भवन्ति; तत्राभ्यासवान् प्रवृत्तमात्रज्योतिः प्रथमः। ऋतंभरप्रज्ञो द्वितीयः। भूतेन्द्रियजयी तृतीयः। अतिक्रान्तभावनीयश्चतुर्थः। तत्र चतुर्थस्य समाधेः प्राप्तसप्तविध-प्रान्तभूमिप्रज्ञो भवति। ऋतम्भरप्रज्ञस्य द्वितीयां मधुमतीसंज्ञां भूमिकां साक्षात्कुर्वतः स्थानिनो

देवा उपनिमन्त्रयितारो भवन्ति, दिव्यस्त्रीरसायनादिकमुपढौकयन्तीति। तस्मिन्नुपनिमन्त्रणे न अनेन सङ्गः कर्त्तव्यः, नापि स्मयः। सङ्गकरणे पुनर्विषयभोगे पतति, स्मयकरणे कृतकृत्यमात्मानं मन्यामानो न समाधावुत्सहते। अतः सङ्गस्मययोस्तेन वर्जनं कर्त्तव्यम्॥

अस्यामेव फलभूतायां विवेकख्यातौ पूर्वोक्तसंयमव्यतिरिक्तमुपायान्तरमाह —

## क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम्॥५२॥

क्षणः सर्वान्त कालावयवः, यस्य कला, प्रभवितुं न शक्यन्ते, तथाविधानां कालक्षणानां यः क्रमः पौर्वापर्य्येण परिणामः, तत्र संयमात् प्रागुक्तं विवेकजं ज्ञानमुप्तद्यते। अयमर्थः — अयं कालक्षणोऽमुष्मात् कालक्षणादुत्तरः, अयमस्मात् पूर्वः, इत्येवंविधे क्रमे कृतसंयमस्यात्यन्तसूक्ष्मेऽपि क्षणक्रमे यदा भवति साक्षात्कारः, तदा अन्यदपि सूक्ष्मं महदादिसाक्षात्करोतीति विवेकज्ञानोत्पत्तिः॥

अस्यैव संयमस्य विषयविवेकोपक्षेपणायाह —

## जातिलक्षणदेशैरन्यतानवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिः॥५३॥

पदार्थानां भेदहेतवो जातिलक्षणदेशा भवन्ति। क्वचिद् भेदहेतुर्जातिः यथा — गौरियं महिषोऽयमिति। जात्या तुल्ययोर्लक्षणं भेदहेतुः, इयं कर्बुरा इयम् अरुणोति। जात्या लक्षणेनाभिन्नयोर्भेदहेतुर्देशो द्रष्टव्यः; यथा — तुल्यप्रमाणयोरामलकयोर्भिन्नदेशस्थितयोः यत्र पुनर्भेदोऽवधारयितुं न शक्यते, यथा — एकदेशस्थितयोः शुक्लयोः पार्थिवयोः परमाण्वोः, तथाविधे विषये भेदाय कृतसंयमस्य भेदेन ज्ञानमुत्पद्यते; तदा तदभ्यासात् सूक्ष्माण्यपि तत्त्वानि भेदेन प्रतिपद्यते। एतदुक्तं भवति — यत्र केनचिदुपायेन भेदो नावधारयितुं शक्यः, तत्र संयमाद्भवत्येव भेदप्रतिपत्तिः॥

सूक्ष्माणां तत्त्वानामुक्तस्य विवेकजन्यज्ञानस्य संज्ञाविषयस्वाभाव्यं व्याख्यातुमाह —

## तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजं ज्ञानम्॥५४॥

उक्तसंयमबलादेव अन्त्यायां भूमिकायामुत्पन्नं ज्ञानं तारकमिति, तारयति अगाधात् संसारसागराद् योगिनम् इत्यन्वर्थिक्या संज्ञया तारकमित्युच्यते। अस्य विषयमाह — सर्वविषयमिति। सर्वाणि तत्त्वानि महदादीनि विषयोऽस्येति सर्वविषयम्। स्वभावश्च अस्य सर्वथाविषयत्वं सर्वाभिरवस्थाभिः स्थूलसूक्ष्मादिभेदेन तैस्तैः परिणामैः सर्वेण प्रकारेण अवस्थितानि तत्त्वानि विषयोऽस्येति सर्वथाविषयम्। स्वभावान्तरमाह अक्रमञ्चेति। निःशेषनानावस्थापरिणतत्र्यात्मकभावग्रहणेनास्य क्रमो विद्यत इति अक्रमं, सर्वं करतलामलकवद् युगपत् पश्यतीत्यर्थः॥

अस्माच्च विवेकजात् तारकाख्याज् ज्ञानात् किं भवतीत्याह —

## सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति॥५५॥

सत्त्व-पुरुषावुक्तलक्षणौ, तयोः शुद्धिसाम्ये कैवल्यम्। सत्त्वस्य सर्वकर्त्तृत्वाभिमाननिवृत्त्या स्वकारणानुप्रवेशः शुद्धिः, पुरुषस्य शुद्धिरुपचरितभोगाभावः, इति द्वयोः समानायां शुद्धौ पुरुषस्य कैवल्यमुत्पद्यते, मोक्षो भवतीत्यर्थः॥

तदेवमन्तरङ्गं योगाङ्गत्रयमभिधाय, तस्य च संयमसंज्ञां कृत्वा; संयमस्य विषयप्रदर्शनार्थं परिणामत्रयमुपपाद्य, संयमबलोत्पद्यमानाः पूर्वान्तपरान्तमध्यभवाः सिद्धीरुपदर्श्य, समाध्यभ्यासो-पपत्तये बाह्या भुवनज्ञानादिरूपा आभ्यान्तराश्च कायव्यूहज्ञानादिरूपाः प्रदर्श्य, समाध्युपयोगाय इन्द्रियप्राणजयादिपूर्विकाः प्रदर्श्य परमपुरुषार्थसिद्धये यथाक्रममवस्थासहितभूतजयेन्द्रिय-सत्त्वजयोद्भवाश्च व्याख्याय, विवेकज्ञानोपपत्तये तास्तानुपायानुपन्यस्य, तारकस्य सर्वसमाध्यवस्थापर्य्यन्तभवस्य स्वरूपमभिधाय, तत्समापत्तेः कृताधिकारस्य चित्तसत्त्वस्य स्वकारणानुप्रवेशात् कैवल्यमुपपद्यत इत्यभिहितम् इति निर्णीतो विभूतिपादस्तृतीयः॥

इति पातञ्जलयोगसूत्रे राजमार्तण्डवृत्तौ विभूतिपादः तृतीयः॥